न तात मन्त्रे तव निश्चयोऽस्ति बालस्त्वमद्याप्यविपक्वबुद्धिः ।
तस्मात्त्वया ह्यात्मविनाशनाय वचोऽर्थहीनं बहु विप्रलप्तम् ॥ ९ ॥

| | |
|---|---|
| तात | "குழந்தாய்! |
| मन्त्रे | ஆலோசனைவிஷயத்தில் |
| तव | உனக்கு |
| निश्चयः | ஆராய்ந்து பகுத்தறிவென்பது |
| अस्ति न | இல்லை. |
| त्वं | நீ |
| बालः | குழந்தை. |
| अद्य अपि | இன்னும் |
| अविपक्वबुद्धिः | தெளியா அறிவுடையவன். |
| तस्मात् हि | அதனால்தான் |
| त्वया | உன்னால் |
| आत्मविनाशनाय | தனது அழிவு காரணமாய் |
| अर्थहीनं | அர்த்தமில்லாத |
| वचः | சொல் |
| बहु | பலவாறு |
| विप्रलप्तम् | வாயில் வந்தபடி பேசப்பட்டது. |

पुत्रप्रवादेन तु रावणस्य त्वमिन्द्रजिन्मित्रमुखोऽसि शत्रुः ।
यस्येदृशं राघवतो विनाशं निशम्य मोहादनुमन्यसे त्वम् ॥ १० ॥

| | |
|---|---|
| इन्द्रजित् | "இந்திரஜித்தே! |
| राघवतः | ஸ்ரீராமரிடமிருந்து |
| यस्य | எந்த இவருக்கு |
| ईदृशं | இப்படிப்பட்டதாகிய |
| विनाशं | அழிவென்பதை |
| निशम्य | கேட்டு |
| मोहात् | (விஷய நுட்பங்களையுணராத)பேதமையால் |
| त्वं | நீ |
| अनुमन्यसे | ஆமோதிக்கின்றனை. |
| तु | அப்படியிருப்பதால் |
| पुत्रप्रवादेन | புத்திரனெனும் வியாஜத்தால் |
| मित्रमुखः | மித்திரனெனவெளித்தோற்றமுடையவனாய் |
| त्वं | நீ |
| रावणस्य | ராவணனுக்கு |
| शत्रुः | சத்ருவாய் |
| असि | ஏற்பட்டிருக்கின்றனை. |

त्वमेव वध्यश्च सुदुर्मतिश्च स चापि वध्यो य इहानयत्त्वाम् ।
बालं दृढं साहसिकं च योऽद्य प्रावेशयन्मन्त्रकृतां समीपम् ॥ ११ ॥

| | |
|---|---|
| सुदुर्मतिः | மிக்க துன்மதியுடைய |
| त्वं एव | நீதான் |
| इह | இப்பொழுது |
| वध्यः च | விதிப்பயனை அனுபவித்தே தீருவாய். |
| यः | எவர் |
| बालं | சிறுவனும் |
| साहसिकं | துணிவுள்ளவனும் |
| दृढं | கொடியனுமாகிய |
| त्वां च | உன்னையும் |
| मन्त्रकृतां | மந்திரிகளின் |
| समीपं | ஸதஸ்ஸில் |
| आनयत् | வரவழைத்தாரோ |
| यः | எவர் |
| प्रावेशयत् च | கூடவும் வைத்துக்கொண்டாரோ |
| सः अपि | அவரும் |
| अद्य | இப்பொழுது |
| वध्यः च | மரணமாகிற விதிப்பயனைக் கண்டே தீரப்போகிறார். |

|| श्रीरामजयम् ||

# || श्रीमद्वाल्मीकिरामायणम् ||

## युद्धकाण्डम्

प्रथमखण्डः ||



धर्मालयसंस्करणम् ।

***The Dharmalaya Edition.***

**Text in Sanskrit with word for word**
**Tamil Translation in Prose Order.**



By
The Late Rao Sahib P. S. KRISHNASWAMI IYER,
*Dharmalaya, Mylapore.*



Published with the aid of
Sri. M. N. RAMASWAMI IYER,
*Banker, Palghat.*



BY
R. SUBRAHMANYA VADHYAR & SONS,
BOOK-SELLERS & PUBLISHERS,
KALPATHI—PALGHAT



Library Edition.] 1941 [Price Rs. 5—0—0

॥ श्रीः ॥

## ॥ विषयानुक्रमणिका ॥

॥ ॐ ॥

॥ अथ स्मार्तानां श्रीरामायणपठनोपक्रमेऽनुसन्धेयाः श्लोकाः ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १ ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे । यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥

दोर्भिर्युक्ता चतुर्भिः स्फटिकमणिमयीमक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण ।
भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानाऽसमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥ ३ ॥

कूजन्तं राम रामेति मधुरं मधुराक्षरम् । आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः । शृण्वन् रामकथानादं को न याति परां गतिम् ॥

यः पिबन् सततं रामचरितामृतसागरम् । अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ६ ॥

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् । रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ७ ॥

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् । कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ ८ ॥

उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥ ९ ॥

आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ १० ॥

यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ ११ ॥

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ १२ ॥

यः कर्णाञ्जलिसंपुटैरहरहः सम्यक् पिबत्यादरात्
वाल्मीकेर्वदनारविन्दगलितं रामायणाख्यं मधु ।
जन्मव्याधिजराविपत्तिमरणैरत्यन्तसोपद्रवं
संसारं स विहाय गच्छति पुमान्विष्णोः पदं शाश्वतम् ॥ १३ ॥

तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ १४ ॥

वाल्मीकिगिरिसंभूता रामसागरगामिनी । पुनातु भुवनं पुण्या रामायणमहानदी ॥ १५ ॥

श्लोकसारजलाकीर्णं सर्गकल्लोलसङ्कुलम् । काण्डग्राहमहामीनं वन्दे रामायणार्णवम् ॥
वेदवेद्ये परे पुंसि जाते दशरथात्मजे । वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १७ ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ १८ ॥

वामे भूमिसुता पुरश्च हनुमान् पश्चात्सुमित्रासुतः
शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाय्वादिकोणेषु च ।
सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवान्
मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥ १९ ॥

नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः ॥ २० ॥



॥ पारायणसमापनसमये अनुसन्धेयश्लोकक्रमः ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकाः समस्ताः सुखिनो भवन्तु ॥ १ ॥
काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी । देशोऽयं क्षोभरहितो ब्राह्मणास्सन्तु निर्भयाः ॥

अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः ।
अधनाः सधनाः सन्तु जीवन्तु शरदां शतम् ॥ ३ ॥

चरितं रघुनाथस्य शतकोटिप्रविस्तरम् । एकैकमक्षरं प्रोक्तं महापातकनाशनम् ॥ ४ ॥
शृण्वन् रामायणं भक्त्या यः पादं पदमेव वा । स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥
रामाय रामभद्राय रामचन्द्राय वेधसे । रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ६ ॥
यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते । वृत्रनाशे समभवत्तत्ते भवतु मङ्गलम् ॥ ७ ॥
यन्मङ्गलं सुपर्णस्य विनताऽकल्पयत्पुरा । अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम् ॥ ८ ॥
अमृतोत्पादने दैत्यान् घ्नतो वज्रधरस्य यत् । अदितिर्मङ्गलं प्रादात्तत्ते भवतु मङ्गलम् ॥
त्रीन्विक्रमान् प्रक्रमतो विष्णोरमिततेजसः । यदासीन्मङ्गलं राम तत्ते भवतु मङ्गलम् ॥ १० ॥
ऋतवः सागरा द्वीपा वेदा लोका दिशश्च ते । मङ्गलानि महाबाहो दिशन्तु तव सर्वदा ॥

कायेन वाचा मनसेन्द्रियैर्वा बुध्याऽऽत्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥ १२ ॥



॥ श्रीवैष्णवानां श्रीरामायणपठनोपक्रमेऽनुसन्धेयाः श्लोकाः ॥

कूजन्तं राम रामेति मधुरं मधुराक्षरम्। आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥
वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः। शृण्वन् रामकथानादं को न याति परां गतिम् ॥
यः पिबन् सततं रामचरितामृतसागरम्। अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ३ ॥
गोष्पदीकृतवाराशिं मशकीकृतराक्षसम्। रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ४ ॥
अञ्जनानन्दनं वीरं जानकीशोकनाशनम्। कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ ५ ॥

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम्।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ ६ ॥
उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः।
आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥ ७ ॥
आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम्।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ ८ ॥
यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम्।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ ९ ॥

वेदवेद्ये परे पुंसि जाते दशरथात्मजे। वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १० ॥

तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम्।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ ११ ॥
श्रीराघवं दशरथात्मजमप्रमेयं सीतापतिं रघुकुलान्वयरत्नदीपम्।
आजानुबाहुमरविन्ददलायताक्षं रामं निशाचरविनाशकरं नमामि ॥ १२ ॥
वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम्।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ १३ ॥



॥ पारायणसमापनक्रमः ॥

एवमेतत्पुरावृत्तमाख्यानं भद्रमस्तु वः। प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ १ ॥
लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः। येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥ २ ॥
काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी। देशोऽयं क्षोभरहितो ब्राह्मणास्सन्तु निर्भयाः॥
कावेरी वर्धतां काले काले वर्षतु वासवः। श्रीरङ्गनाथो जयतु श्रीरङ्गश्रीश्च वर्धताम् ॥ ४ ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकाः समस्ताः सुखिनो भवन्तु ॥ ५ ॥

मङ्गलं कोसलेन्द्राय महनीयगुणाब्धये । चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ ६ ॥
वेदवेदान्तवेद्याय मेघश्यामलमूर्तये । पुंसां मोहनरूपाय पुण्यश्लोकाय मङ्गलम् ॥ ७ ॥
विश्वामित्रान्तरङ्गाय मिथिलानगरीपतेः । भाग्यानां परिपाकाय भव्यरूपाय मङ्गलम् ॥
पितृभक्ताय सततं भ्रातृभिः सह सीतया । नन्दिताखिललोकाय रामभद्राय मङ्गलम् ॥
त्यक्तसाकेतवासाय चित्रकूटविहारिणे । सेव्याय सर्वयमिनां धीरोदाराय मङ्गलम् ॥१०॥
सौमित्रिणा च जानक्या चापबाणासिधारिणे । संसेव्याय सदा भक्त्या स्वामिने मम मङ्गलम्॥
दण्डकारण्यवासाय खण्डितामरशत्रवे । गृध्रराजाय भक्ताय मुक्तिदायास्तु मङ्गलम् ॥
सादरं शबरीदत्तफलमूलाभिलाषिणे । सौलभ्यपरिपूर्णाय सत्त्वोद्रिक्ताय मङ्गलम् ॥
हनुमत्समवेताय हरीशाभीष्टदायिने । वालिप्रमथनायास्तु महाधीराय मङ्गलम् ॥ १४ ॥
श्रीमते रघुवीराय सेतूल्लङ्घितसिन्धवे । जितराक्षसराजाय रणधीराय मङ्गलम् ॥ १५ ॥
आसाद्य नगरीं दिव्यामभिषिक्ताय सीतया । राजाधिराजराजाय रामभद्राय मङ्गलम् ॥
मङ्गलाशासनपरैर्मदाचार्यपुरोगमैः । सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गलम् ॥ १७ ॥



॥ अथ माध्वानां रामायणपठनोपक्रमेऽनुसन्धेयाः श्लोकाः ॥

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १ ॥
लक्ष्मीनारायणं वन्दे तद्भक्तप्रवरो हि यः । श्रीमदानन्दतीर्थाख्यो गुरुस्तं च नमाम्यहम् ॥
वेदे रामायणे चैव पुराणे भारते तथा । आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥
सर्वविघ्नप्रशमनं सर्वसिद्धिकरं परम् । सर्वजीवप्रणेतारं वन्दे विजयदं हरिम् ॥ ४ ॥
सर्वाभीष्टप्रदं रामं सर्वारिष्टनिवारकम् । जानकीजानिमनिशं वन्दे मद्गुरुवन्दितम् ॥ ५ ॥
अभ्रमं भङ्गरहितमजडं विमलं सदा । आनन्दतीर्थमतुलं भजे तापत्रयापहम् ॥ ६ ॥
भवति यदनुभावादेडमूकोऽपि वाग्मी जडमतिरपि जन्तुर्जायते प्राज्ञमौलिः ।
सकलवचनचेतोदेवता भारती सा मम वचसि विधत्तां सन्निधिं मानसे च ॥ ७ ॥
मिथ्यासिद्धान्तदुर्ध्वान्तविध्वंसनविचक्षणः । जयतीर्थाख्यतरणिर्भासतां नो हृदम्बरे ॥ ८ ॥
चित्रैः पदैश्च गम्भीरैर्वाक्यैर्मानैरखण्डितैः । गुरुभावं व्यञ्जयन्ती भाति श्रीजयतीर्थवाक् ॥
कूजन्तं राम रामेति मधुरं मधुराक्षरम् । आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥
वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः । शृण्वन् रामकथानादं को न याति परां गतिम् ॥
यः पिबन् सततं रामचरितामृतसागरम् । अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ १२ ॥
गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् । रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ १३ ॥
अञ्जनानन्दनं वीरं जानकीशोककनाशनम् । कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ १४ ॥

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ १५ ॥
उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥ १६ ॥
आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ १७ ॥
यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ १८ ॥
वेदवेद्ये परे पुंसि जाते दशरथात्मजे। वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १९ ॥
आपदामपहर्तारं दातारं सर्वसम्पदाम् । लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥
तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ २१ ॥
वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ २२ ॥
वन्दे वन्द्यं विधिभवमहेन्द्रादिवृन्दारकेन्द्रैः
व्यक्तं व्याप्तं स्वगुणगणतो देशतः कालतश्च ।
धूतावद्यं सुखचितिमयैर्मङ्गलैर्युक्तमङ्गैः
सानाथ्यं नो विदधदधिकं ब्रह्म नारायणाख्यम् ॥ २३ ॥
भूषारत्नं भुवनवलयस्याखिलाश्चर्यरत्नं
लीलारत्नं जलधिदुहितुर्देवतामौलिरत्नम् ।
चिन्तारत्नं जगति भजतां सत्सरोजद्युरत्नं
कौसल्याया लसतु मम हृन्मण्डले पुत्ररत्नम् ॥ २४ ॥
महाव्याकरणाम्भोधिमन्थमानसमन्दरम् । कवयन्तं रामकीर्त्या हनुमन्तमुपास्महे ॥ २५ ॥
मुख्यप्राणाय भीमाय नमो यस्य भुजान्तरम्। नानावीरसुवर्णानां निकषाश्मायितं बभौ ॥
स्वान्तस्थानन्तशय्याय पूर्णज्ञानमहार्णसे । उत्तुङ्गवाक्तरङ्गाय मध्वदुग्धाब्धये नमः॥ २७ ॥
वाल्मीकेर्गौः पुनीयान्नो महीधरपदाश्रया । यद्दुग्धमुपजीवन्ति कवयस्तर्णका इव ॥ २८ ॥
सूक्तिरत्नाकरे रम्ये मूलरामायणार्णवे। विहरन्तो महीयांसः प्रीयन्तां गुरवो मम ॥ २९ ॥
हयग्रीव हयग्रीव हयग्रीवेति यो वदेत्। तस्य निःसरते वाणी जह्नुकन्याप्रवाहवत्॥ ३० ॥



पारायणसमापनक्रमः ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकाः समस्ताः सुखिनो भवन्तु ॥ १ ॥
काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी। देशोऽयं क्षोभरहितो ब्राह्मणास्सन्तु निर्भयाः॥
लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः । येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥ ३ ॥
मङ्गलं कोसलेन्द्राय महनीयगुणाब्धये । चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ ४ ॥

इत्यादिश्लोकाः श्रीवैष्णवपद्धतिवदनुसन्धेयाः ॥



॥ श्रीमद्रामायणपूजाक्रमः ॥

शुक्लांबरधरं+शान्तये । ॐभूः+भूर्भुवः सुवरों । ममोपात्त+प्रीत्यर्थं सीता लक्ष्मणभरतशत्रुघ्नहनुमत्समेतश्रीरामचन्द्रप्रसादसिध्यर्थं श्रीरामचन्द्रप्रसादेन सर्वाभीष्ट-सिध्यर्थं श्रीरामचन्द्रपूजां करिष्ये ; यावच्छक्ति पूजां पारायणं च करिष्ये ; तदङ्गं कलश-शङ्खात्मपीठपूजां च करिष्ये ॥

अस्मिन् पुस्तके सीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेत श्रीरामचन्द्रं ध्यायामि, आवा-हयामि, रत्नसिंहासनं समर्पयामि, पाद्यं समर्पयामि, आचमनीयं समर्पयामि, अर्घ्यं समर्प-यामि, आचमनीयं समर्पयामि, स्नानं समर्पयामि, स्नानानन्तरमाचमनीयं समर्पयामि, वस्त्रं समर्पयामि, यज्ञोपवीतोत्तरीयाभरणार्थं पुष्पाणि समर्पयामि । गन्धान् धारयामि, अक्षतान् समर्पयामि, पुष्पाणि समर्पयामि ॥

| | | | |
|---|---|---|---|
| ॐ अच्युताय नमः | ॐ नारायणाय नमः | ॐ मधुसूदनाय नमः | ॐ हृषीकेशाय नमः |
| अनन्ताय नमः | माधवाय नमः | त्रिविक्रमाय नमः | दामोदराय नमः |
| गोविन्दाय नमः | गोविन्दाय नमः | वामनाय नमः | पद्मनाभाय नमः |
| केशवाय नमः | विष्णवे नमः | श्रीधराय नमः | श्रीरामचन्द्राय नमः |

समस्तोपचारान समर्पयामि ।

धूपमाघ्रापयामि, दीपं दर्शयामि, कदलीफलं निवेदयामि । ताम्बूलं समर्पयामि । कर्पूरनीराजनं दर्शयामि । छत्रचामरादि समस्तोपचारान् समर्पयामि । प्रदक्षिणनम-स्कारान् समर्पयामि ॥



ॐ

॥ श्रीगुरुभ्यो नमः ॥

श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेतश्रीरामचन्द्रस्वामिने नमः ॥

# ॥ श्रीमद्वाल्मीकिरामायणम् ॥

## युद्धकाण्डम्

### प्रथमखण्डः ॥



[पुरा कुशलवाभ्यां श्रीरामसन्निधावश्वमेधयज्ञवाटे द्वात्रिंशति दिनेषु गीते श्रीमद्रामायणे विंशतितमेऽह्नि युद्धकाण्डे प्रथमसर्गमारभ्य चतुर्विंशतिसर्गपर्यन्तं (14676—15564 श्लोकाः) गीतम् । तस्मिन् दिने गीताः श्लोकाश्च 889]

ஆதியில் குசன் லவன் இவர்களால் ஸ்ரீராமஸந்நிதியில் அச்வமேதயாகசாலையில் முப்பத்திரண்டு தினங்களில் கானம் செய்யப்பட்ட ஸ்ரீமத் ராமாயணத்தில் இருபதாவது தினத்தில் யுத்தகாண்டத்தில 1-வது ஸர்க்கம் முதல் 24 வது ஸர்க்கம் வரை (14676—15564) கானம் செய்யப்பட்டது. அன்று கானம் செய்யப்பட்ட சுலோகசங்கியை 889]

**प्रथमः सर्गः—முதல் ஸர்க்கம் ॥ १ ॥**

**हनुमत्प्रशंसा—ஹனுமாரைப் புகழ்வது.**

**श्रुत्वा हनुमतो वाक्यं यथावदभिभाषितम् । रामः प्रीतिसमायुक्तो वाक्यमुत्तरमब्रवीत् ॥**

| | |
|---|---|
| रामः | ஸ்ரீராமர், |
| हनुमतः | ஹனுமாரின் |
| यथावत् | உள்ளபடி |
| अभिभाषितं | சொல்லப்பட்ட |
| वाक्यं | மொழியை |
| श्रुत्वा | கேட்டு, |
| प्रीतिसमायुक्तः | மனஸந்துஷ்டியுடன் கூடியவராய் |
| उत्तरं वाक्यं | பதில்சொல்லை |
| अब्रवीत् | பின்வருமாறு மொழிந்தார்:

**कृतं हनुमता कार्यं सुमहद्भुवि दुष्करम् । मनसाऽपि यदन्येन न शक्यं धरणीतले ॥ २ ॥**

| | | | |
|---|---|---|---|
| धरणीतले | "உலகத்தில் | दुष्करं | அரும் |
| अन्येन | மற்றொருவனாலும் | सुमहत् | மிகப்பெரிய |
| मनसा अपि | மனத்தினாலுங்கூட | कार्यं | காரியமானது |
| | | भुवि | உலகில் |
| यत् | எது | हनुमता | ஹனுமாரால் |
| शक्यं न | அசாத்தியமோ அந்த | कृतम् | செய்யப்பட்டது. |

**न हि तं परिपश्यामि यस्तरेत महार्णवम् । अन्यत्र गरुडाद्वायोरन्यत्र च हनूमतः ॥ ३ ॥**

| | | | |
|---|---|---|---|
| गरुडात् | "கருடபகவானையும் | यः | எவன் |
| वायोः | வாயுபகவானையும் | महार्णवं हि | பெருங்கடலையே |
| अन्यत्र | தவிர்த்து | तरेत | தாண்டுவானோ |
| हनुमतः च | ஹனுமாரையும் | तं | அவனை |
| अन्यत्र | தவிர்த்து வேறு | परिपश्यामि न | நான் கண்டிலேன். |

**देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् । अप्रधृष्यां पुरीं लङ्कां रावणेन सुरक्षिताम् ॥**
**प्रविष्टः सत्त्वमाश्रित्य जीवन् को नाम निष्क्रमेत् ॥ ४ ॥**

| | | | |
|---|---|---|---|
| देवदानवयक्षाणां | "தேவர்கள், அசுரர்கள், யக்ஷர்கள் இவர்களுக்கும் | सुरक्षितां | நன்கு பாதுகாக்கப்பட்டதுமான |
| | | लङ्कां पुरीं | இலங்கை நகரினுள் |
| गन्धर्वोरगरक्षसां | கந்தர்வர்கள், உரகர்கள், அரக்கர்கள் இவர்களுக்கும் | कः नाम | எவன்தான் |
| | | सत्त्वं आश्रित्य | மனோவலிமையைக்கொண்டு |
| | | प्रविष्टः | புகுந்துவிட்டு |
| अप्रधृष्यां | புகமுடியாததும் | जीवन् | உயிருடன் |
| रावणेन | ராவணனால் | निष्क्रमेत् | திரும்பிவருவான்? |

**को विशेत्सुदुराधर्षां राक्षसैश्च सुरक्षिताम् । यो वीर्यबलसंपन्नो न समः स्याद्धनूमतः ॥ ५ ॥**

| | | | |
|---|---|---|---|
| राक्षसैः | "அரக்கர்களால் | हनूमतः | ஹனுமாருக்கு |
| सुदुराधर्षां | ஒருவராலும் புகமுடியாததாய் | समः | நிகரான |
| सुरक्षितां | நன்றாகப் பாதுகாக்கப்பட்டதினுள் | वीर्यबलसम्पन्नः | ஆண்மையும் ஆற்றலும் நிறைந்தவன் |
| कः | எவன் | यः च | எவனும் |
| विशेत् | புகுவான்? | स्यात् न | இல்லை. |

**भृत्यकार्यं हनुमता सुग्रीवस्य कृतं महत् । एवं विधाय स्वबलं सदृशं विक्रमस्य च ॥ ६ ॥**

| | | | |
|---|---|---|---|
| हनुमता | "ஹனுமாரால் | भृत्यकार्यं | அடிமைசெய்யவேண்டியகாரியம் |
| विक्रमस्य | மனோவலிமைக்கு | | |
| सदृशं | ஏற்றதாயிருக்கிற | एवं | இப்படியாய் |
| स्वबलं | தனது சக்தியை | महत् | மெச்சும்வண்ணமாய் |
| विधाय च | காண்பித்துக்கொண்டு | कृतम् | செய்துமுடிக்கப்பட்டது. |
| सुग्रीवस्य | சுக்ரீவனுக்கு | | |

**यो हि भृत्यो नियुक्तः सन्भर्त्रा कर्मणि दुष्करे । कुर्यात्तदनुरागेण तमाहुः पुरुषोत्तमम् ॥**

| | |
|---|---|
| यः | "எந்த ஒரு |
| भृत्यः | வேலைக்காரன் |
| भर्त्रा | எஜமானனால் |
| दुष्करे | கஷ்டமான |
| कर्मणि | ஒரு காரியத்தில் |
| नियुक्तः सन् | ஆக்ஞாபிக்கப்பட்டவனாய் |
| तत् | அதை |
| अनुरागेण | (எஜமானனுக்குக்குறைவரக்கூடாதெனும்) பத்திமையோடு |
| कुर्यात् | செய்துமுடிக்கின் |
| तं हि | அவனைத்தான் [றனோ |
| पुरुषोत्तमं | புருஷோத்தமனென |
| आहुः | பெரியோர்கள் சொல்லியிருக்கின்றார்கள். |

**नियुक्तो यः परं कार्यं न कुर्यान्नृपतेः प्रियम् । भृत्यो युक्तः समर्थश्च तमाहुर्मध्यमं नरम् ॥**

| | |
|---|---|
| यः | "எவனேனுமொரு |
| युक्तः | அனுபவசாலியும் |
| समर्थः च | சாமர்த்தியசாலியுமான |
| भृत्यः | வேலைக்காரன் |
| नियुक्तः | ஒருகாரியத்திலேவப்பட்டவனாய் |
| परं | பெரும் |
| कार्यं | காரியத்தை |
| नृपतेः | மன்னனுக்கு |
| प्रियं | நன்மைவிளைவிக்கத்தக்கதாய் |
| न कुर्यात् | செய்யவில்லையோ |
| तं | அவனை |
| मध्यमं | நடுத்தரமான |
| नरं | மானிடனை |
| आहुः | பெரியோர்கள் சொல்லுகின்றார்கள். |

**नियुक्तो नृपतेः कार्यं न कुर्याद्यः समाहितः । भृत्यो युक्तः समर्थश्च तमाहुः पुरुषाधमम् ॥**

| | |
|---|---|
| यः | "எவனேனுமொரு |
| युक्तः | அனுபவசாலியும் |
| समर्थः च | சாமர்த்தியசாலியு [மான |
| भृत्यः | வேலைக்காரன் |
| नियुक्तः | ஒருகாரியத்திலேவப்பட்டவனாய் |
| समाहितः च | எதெலதை எப்படிச் செய்யவேண்டுமென்று ஆக்கினைபெற்றவனாகியும் |
| नृपतेः | மன்னனது |
| कार्यं | காரியத்தை |
| न कुर्यात् | அப்படியே செய்யாதிருக்கின்றனோ |
| तं | அவனை |
| पुरुषाधमं | புருஷாதமனென |
| आहुः | பெரியோர்கள் சொல்லுகின்றார்கள். |

**तन्नियोगे नियुक्तेन कृतं कृत्यं हनूमता । न चात्मा लघुतां नीतः सुग्रीवश्चापि तोषितः ॥**

| | |
|---|---|
| तन्नियोगे | "அக்காரியத்தில் |
| नियुक्तेन | நியமிக்கப்பட்ட |
| हनूमता | ஹனுமாரால் |
| कृत्यं | செய்யவேண்டிய காரியம் |
| कृतं | செய்துமுடிக்கப்பட்டது. |
| आत्मा च | பிரவிக்குணமும் |
| लघुतां | தாழ்மையை |
| नीतः न | அடையச்செய்யப்படவில்லை. |
| सुग्रीवः अपि च | சுக்ரீவனும் |
| तोषितः | உள்ளங்குளிரச்செய்யப்பட்டான். |

अहं च रघुवंशश्च लक्ष्मणश्च महाबलः । वैदेह्या दर्शनेनाद्य धर्मतः परिरक्षिताः ॥ ११ ॥

| | | | |
|---|---|---|---|
| अहं च | "நானும் | धर्मतः | தர்மமே பயனென்ற |
| रघुवंशः च | ரகுகுலமும் | दर्शनेन | கண்டுவந்ததினால் [படி |
| महाबलः | மகா பலசாலியாகிய | अद्य | இப்பொழுது |
| लक्ष्मणः च | லக்ஷ்மணனும் | परिरक्षिताः | நன்கு பேருதவி செய்யப்பெற்றோம். |
| वैदेह्याः | ஜானகியை | | |

इदं तु मम दीनस्य मनो भूयः प्रकर्षति । यदिहास्य प्रियाख्यातुर्न कुर्मि सदृशं प्रियम् ॥

| | | | |
|---|---|---|---|
| प्रियाख्यातुः | "பிரியமான சமாசாரத்தைச்சொன்ன | यत् तु | அப்படியிருப்பதால் தான் |
| अस्य | இவனுக்கு | दीनस्य | வருத்தப்பட்டுக் கொண்டிருக்கிற |
| सदृशं | ஏற்ற | | |
| प्रियं | உதவியை | मम मनः | எனது மனதை |
| इह | இப்பொழுது | भूयः | பின்னும் |
| न कुर्मि | செய்யமுடியாதிருக் கிறேன். | इदं | இது |
| | | प्रकर्षति | வாட்டுகின்றது. |

एष सर्वस्वभूतस्तु परिष्वङ्गो हनूमतः । मया कालमिमं प्राप्य दत्तस्तस्य महात्मनः ॥

| | | | |
|---|---|---|---|
| इमं | " இந்த | हनूमतः | ஹனுமானுக்கு |
| कालं | காலத்தை | सर्वस्वभूतः | எல்லாவற்றிலும் மேம் பட்டதான |
| प्राप्य | அடைந்து | | |
| मया | என்னால் | एषः | இந்த |
| महात्मनः | மகாத்மாவாகிய | परिष्वङ्गः तु | ஆலிங்கனம்தான் |
| तस्य | அந்த | दत्तः | செய்யப்படுகிறது." |

इत्युक्त्वा प्रीतिहृष्टाङ्गो रामस्तं परिषस्वजे । हनूमन्तं महात्मानं कृतकार्यमुपागतम् ॥ १४ ॥

| | | | |
|---|---|---|---|
| रामः | ஸ்ரீராமர் | कृतकार्यं | (ஆகவேண்டிய) காரியத் தை செய்து முடித்து |
| इति | மேற்கண்டவாறு | उपागतं | திரும்பிவந்துசேர்ந்த |
| उक्त्वा | சொல்லிவிட்டு | महात्मानं | மகாத்மாவான |
| प्रीतिहृष्टाङ्गः | பேருதவியால் உள் ளம் பூரித்தவராகி | तं हनूमन्तं | அந்த ஹனுமாரை |
| | | परिषस्वजे | ஆலிங்கனம் செய்தரு ளினார். |

ध्यात्वा पुनरुवाचेदं वचनं रघुसत्तमः । हरीणामीश्वरस्यैव सुग्रीवस्योपशृण्वतः ॥ १५ ॥

| | | | |
|---|---|---|---|
| रघुसत्तमः | ஸ்ரீராகவர் | ध्यात्वा | சிறிது ஆலோசித்து |
| हरीणां | வானரர்களுடைய | पुनः | அதன்மேல் |
| ईश्वरस्य | மன்னனாகிய | इदं | பின்வரும் |
| सुग्रीवस्य | சுக்ரீவன் | वचनं | சொல்லை |
| उपशृण्वतः एव | கேட்டுக்கொண்டிருக் கும்பொழுதே, | उवाच | மொழிந்தார்: |

**सर्वथा सुकृतं तावत्सीतायाः परिमार्गणम् । सागरं तु समासाद्य पुनर्नष्टं मनो मम ॥१६॥**

| | | | |
|---|---|---|---|
| सीतायाः | "ஸீதையை | सागरं | சமுத்திரத்தை |
| परिमार्गणं | தேடிக்கண்டுபிடிப்பது | समासाद्य | நினைத்து |
| सर्वथा | எப்படியும் | मम | எனது |
| सुकृतं | நன்குசெய்துமுடிக்கப்பட்டது | मनः तु | மனமும் |
| | | पुनः | மீளவும் |
| तावत् | என்றாலும், | नष्टम् | கலங்கிவிட்டது. |

**कथं नाम समुद्रस्य दुष्पारस्य महाम्भसः । हरयो दक्षिणं पारं गमिष्यन्ति समाहिताः ॥**

| | | | |
|---|---|---|---|
| महांभसः | "அளவுகடந்த ஜலமுடையதும் | दक्षिणं | தென் |
| | | पारं | கரையை |
| दुष्पारस्य | தாண்டமுடியாததுமான | हरयः | வானரர்கள் |
| | | समाहिताः | ஒன்றுசேர்ந்து |
| | | कथं नाम | எப்படித்தான் |
| समुद्रस्य | சமுத்திரத்தினது | गमिष्यन्ति | அடைவார்கள்? |

**यद्यप्येष तु वृत्तान्तो वैदेह्या गदितो मम । समुद्रपारगमने हरीणां किमिवोत्तरम् ॥ १८ ॥**

| | | | |
|---|---|---|---|
| वैदेह्याः | "ஜானகியின் | हरीणां | வானரர்களுடைய |
| एषः | இந்த | समुद्रपार-गमने | சமுத்திரத்தின் அக்கரையை அடைதல் விஷயத்தில் |
| वृत्तान्तः | விருத்தாந்தம் | | |
| तु | இப்பொழுது | | |
| मम | எனக்கு | | |
| गदितः | சொல்லப்பட்டது. | उत्तरं इव | உளது தீர்மானந்தான் |
| यदि अपि | ஆனாலும் | किम् | என்ன?" |

**इत्युक्त्वा शोकसंभ्रान्तो रामः शत्रुनिबर्हणः । हनुमन्तं महाबाहुस्ततो ध्यानमुपागमत् ॥**

| | | | |
|---|---|---|---|
| शत्रुनिबर्हणः | சத்ருக்களை வருத்துபவரும் | इति | மேற்கண்டவாறு |
| | | उक्त्वा | சொல்லிவிட்டு |
| महाबाहुः | மகாபாகுவுமான | शोकसंभ्रान्तः | சோகத்தால் கலங்கினவராய் |
| रामः | ஸ்ரீராமர் | ततः | அப்பொழுது |
| हनुमन्तं | ஹனுமானைப் பார்த்து | ध्यानं | சிந்தையில் |
| | | उपागमत् | ஆழ்ந்துவிட்டார். |

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
युद्धकाण्डे प्रथमः सर्गः ॥

आदितः श्लोकाः 14694 युद्धकाण्डे आदितः श्लोकाः 19



**द्वितीयः सर्गः**—இரண்டாவது ஸர்க்கம் ॥ २ ॥

**सुग्रीवेण श्रीरामप्रोत्साहनम्**—ஸுக்ரீவன் ஸ்ரீராமரை உற்சாகப்படுத்துவது.

**तं तु शोकपरिद्यूनं रामं दशरथात्मजम् । उवाच वचनं श्रीमान्सुग्रीवः शोकनाशनम् ॥१॥**

| | | | |
|---|---|---|---|
| श्रीमान् | ஸ்ரீமானாகிய | रामं | ஸ்ரீராமரைப்பார்த்து |
| सुग्रीवः | சுக்ரீவன் | तु | இவ்விஷயத்தில் |
| शोकपरिद्यूनं | சோகத்தால் நைந்துருகும் | शोकनाशनं | சோகத்தைப்போக்க வல்ல |
| दशरथात्मजं | தசரதரின் புதல்வராகிய | वचनं | சொல்லை |
| | | उवाच | பின்வருமாறு மொழிந்தான்: |
| तं | அந்த | | |

**किं त्वं संतप्यसे वीर यथाऽन्यः प्राकृतस्तथा ॥ २ ॥**

| | | | |
|---|---|---|---|
| वीर | "வீரரே! | यथा तथा | போலவே |
| अन्यः | மற்ற | त्वं | தேவரீர் |
| | | किं | ஏன் |
| प्राकृतः | சாதாரண மானிடன் | संतप्यसे | வருந்துகின்றீர்? |

**मैवं भूस्त्यज संतापं कृतघ्न इव सौहृदम् ॥ ३ ॥**

| | | | |
|---|---|---|---|
| कृतघ्नः | "நன்றிகொன்றவன் | सन्तापं | மனக்கவலையை |
| सौहृदं | சினேகத்தை | त्यज | அகற்றுவீராக. |
| | | एवं | இப்படி |
| इव | எவ்வண்ணமோ அவ்வண்ணமே | मा भूः | தேவரீர் இருத்தல் கூடாது. |

**संतापस्य च ते स्थानं न हि पश्यामि राघव । प्रवृत्तावुपलब्धायां ज्ञाते च निलये रिपोः ॥**

| | | | |
|---|---|---|---|
| राघव | "ஸ்ரீராம! | ज्ञाते च | தெரிந்துவிட்டிருக்கையிலும், |
| प्रवृत्तौ | தற்காலநிலைமை | | |
| उपलब्धायां च | தெரிந்துவிட்டிருக்கையிலும் | ते | தேவரீருடைய |
| | | सन्तापस्य | மனக்கவலைக்கு |
| रिपोः | சத்துருவினது | स्थानं हि | காரணமென்பதையே |
| निलये | இருப்பிடம் | पश्यामि न | நான் அறியவில்லை. |

**मतिमाञ्छास्त्रवित्प्राज्ञः पण्डितश्चासि राघव । त्यजेमां पापिकां बुद्धिं कृतात्मेवार्थदूषणीम् ॥**

| | | | |
|---|---|---|---|
| राघव | "ஸ்ரீராம! (நீர்) | कृतात्मा | மனச்சாந்திகண்டவன் |
| मतिमान् | பேரறிவாளர்; | अर्थदूषणीं | அடைந்த பயனைக் கெடுக்கிறதை |
| शास्त्रवित् | சாஸ்திரங்களை நன்கறிந்தவர்; | इव | எவ்வண்ணமோ அவ்வண்ணமே |
| प्राज्ञः | எதையும் ஆராய்ந்து செய்யத்தகுந்தவர்; | इमां | இந்த |
| | | पापिकां | நன்மையைத்தாராத |
| पण्डितः च असि | எதிலும் சாமர்த்தியசாலியாயுமிருக்கிறீர். | बुद्धिं | மனோபாவத்தை |
| | | त्यज | அகற்றியருள்க. |

**समुद्रं लङ्घयित्वा तु महानक्रसमाकुलम् । लङ्कामारोहयिष्यामो हनिष्यामश्च रावणम् ॥६॥**

| | | | |
|---|---|---|---|
| महानक्रसमाकुलं | “பெரும் முதலைக்கூட்டங்களால் நிரம்பிய | लङ्कां | இலங்கையில் |
| समुद्रं | சமுத்திரத்தை | तु | இப்பொழுது |
| लंघयित्वा | தாண்டி | आरोहयिष्यामः | புகுவோம். |
| | | रावणं च | ராவணனையும் |
| | | हनिष्यामः | வதைப்போம். |

**निरुत्साहस्य दीनस्य शोकपर्याकुलात्मनः । सर्वार्था व्यवसीदन्ति व्यसनं चाधिगच्छति ॥**

| | | | |
|---|---|---|---|
| निरुत्साहस्य | “உத்ஸாஹத்தைக் கைவிட்டு | सर्वार्थाः | காரியங்களெல்லாம் |
| दीनस्य | மனஏக்கங்கொண்டு | व्यवसीदन्ति | பாழாய்விடுகின்றன. |
| शोकपर्याकुलात्मनः | சோகத்தில் மூழ்கிய ஒருவனுக்கு | व्यसनं च | (எதிர்பாராத) ஆபத்தும் |
| | | अधिगच्छति | விளைகிறது. |

**इमे शूराः समर्थाश्च सर्वे नो हरियूथपाः । त्वत्प्रियार्थं कृतोत्साहाः प्रवेष्टुमपि पावकम् ॥**

| | | | |
|---|---|---|---|
| नः | “நமது | सर्वे | எல்லோருமே |
| इमे | இந்த | त्वत्प्रियार्थं अपि | தேவரீருக்கு நன்மையேற்படின் |
| शूराः | சூரர்களும் | पावकं च | அக்னியிலும் |
| समर्थाः | சமர்த்தர்களுமான | प्रवेष्टुं | குதிப்பதற்கு |
| हरियूथपाः | வானரச்சேனைத்தலைவர்கள் | कृतोत्साहाः | சலியாதவர்கள். |

**एषां हर्षेण जानामि तर्कश्चास्मिन्दृढो मम ॥९॥**

| | | | |
|---|---|---|---|
| एषां | “இவர்களுடைய | मम | எனது |
| हर्षेण | முகமலர்ச்சியால் | तर्कः | காரணம் |
| जानामि | அறிகிறேன். | दृढः च | எப்படியும் அசையவொண்ணாதது. |
| अस्मिन् | இதில் | | |

**विक्रमेण समानेष्ये सीतां हत्वा यथा रिपुम् । रावणं पापकर्माणं तथा त्वं कर्तुमर्हसि ॥**

| | | | |
|---|---|---|---|
| पापकर्माणं | “பாபச்செயலுடைய | सीतां | ஸீதாதேவியை |
| रिपुं | சத்துருவாகிய | समानेष्ये | கொண்டுவருவேனோ, |
| रावणं | ராவணனை | तथा | அப்படி |
| यथा | எப்படிச்செய்தால் | त्वं | தேவரீர் |
| विक्रमेण | பராக்கிரமத்தால் | कर्तुं | ஆக்ஞாபிக்க |
| हत्वा | கொன்று | अर्हसि | திருவுளம் கொள்ள வேண்டும். |

**सेतुरत्र यथा बध्येद्यथा पश्येम तां पुरीम् । तस्य राक्षसराजस्य तथा त्वं कुरु राघव ॥**

| | | | |
|---|---|---|---|
| राघव | "ஸ்ரீராம! | अत्र | (இப்பொழுதே) இங் |
| तस्य | அந்த | यथा | எப்படி [கேயே |
| राक्षसराजस्य | ராக்ஷஸமன்னனது | सेतुः | அணை |
| तां | அந்த | बध्येत् | கட்டப்படவேண்டு |
| पुरीं | நகரை | तथा | அவ்வண்ணமே [மோ, |
| यथा | எப்படியானால் | त्वं | தேவரீர் |
| पश्येम | நேரில் காண்போமோ | कुरु | ஆக்ஞாபித்தருள்க. |

**दृष्ट्वा तां तु पुरीं लङ्कां त्रिकूटशिखरे स्थिताम् । हतं च रावणं युद्धे दर्शनादुपधारय ॥**

| | | | |
|---|---|---|---|
| त्रिकूटशिखरे | "திரிகூடமலையின் சிகரத்தில் | दर्शनात् तु | கண்டதுமே |
| | | युद्धे | போரில் |
| स्थितां | நிர்மிக்கப்பட்டுள்ள | रावणं च | ராவணனையும் |
| तां | அந்த | हतं | மாண்டுபோய்விட்ட வனாக |
| लङ्कां पुरीं | இலங்கை நகரை | | |
| दृष्ट्वा | கண்டு, | उपधारय | முடிவுகொள்ளும். |

**अबद्ध्वा सागरे सेतुं घोरे तु वरुणालये । लङ्का न मर्दितुं शक्या सेन्द्रैरपि सुरासुरैः ॥**

| | | | |
|---|---|---|---|
| वरुणालये | "வருணனுக்கிருப்பிடமாகிய | सेन्द्रैः | இந்திரனுள்பட |
| | | सुरासुरैः अपि | தேவர்களாலும் அசுரர்களாலுங்கூட |
| घोरे | பயங்கரமான | | |
| सागरे | சமுத்திரத்தில் | लङ्का | இலங்கை நகர் |
| सेतुं | அணையை | मर्दितुं | மேற்கொள்ள |
| अबद्ध्वा तु | கட்டாமல் | न शक्या | முடியாதது. |

**सेतुर्बद्धः समुद्रे च यावल्लङ्कासमीपतः । इमे हि समरे शूरा हरयः कामरूपिणः ॥ १४ ॥**

| | | | |
|---|---|---|---|
| लङ्कासमीपतः | "இலங்கை எல்லைவரைக்கும் | कामरूपिणः | நினைத்த உருவமெடுக்கவல்ல |
| समुद्रे | சமுத்திரத்தில் | इमे | இந்த |
| सेतुः | அணை | हरयः | வானரர்கள் |
| बद्धः | கட்டியாய்விட்டது. | समरे | போரில |
| यावत् च | என்றாலோ | शूराः हि | வெல்ல வல்லவர்களே. |

**तदलं विक्लबा बुद्धी राजन्सर्वार्थनाशिनी । पुरुषस्य हि लोकेऽस्मिञ्छोकः शौर्यापकर्षणः ॥**

| | | | |
|---|---|---|---|
| राजन् | "சக்கிரவர்த்தியே! | हि | ஏனெனில் |
| सर्वार्थनाशिनी | எல்லாக் காரியத்தையும் பாழாக்குகின்ற | अस्मिन् | இந்த |
| | | लोके | உலகில் |
| विक्लबा | சலனமாகிற | शोकः | மனவேதனையானது |
| बुद्धिः | எண்ணமானது | | |
| तत् | இப்பொழுதே | पुरुषस्य | ஓர் மனிதனுடைய |
| अलं | முற்றிலுமொழிக்கப்படட்டும். | शौर्यापकर्षणः | ஆற்றலைக் கரைத்துவிடுகிறது. |

**यत्तु कार्यं मनुष्येण शौण्डीर्यमवलम्बता । अस्मिन्काले महाप्राज्ञ सत्त्वमातिष्ठ तेजसा ॥१६॥**

| | |
|---|---|
| महाप्राज्ञ | "பேரறிஞரே! |
| अवलम्बता | ஒரு காரியத்தை ஆச்ரயித்திருக்கிற |
| मनुष्येण | ஓர் மனிதனால் |
| यत् शौण्डीर्यं | எந்த ஆண்மை |
| कार्यं | கொள்ளத்தக்கதோ அந்த |
| सत्त्वं तु | மனோதைரியத்தையே |
| अस्मिन् | இந்த |
| काले | காலத்தில் |
| तेजसा | பிறவிக்குணத்தால் |
| आतिष्ठ | மேற்கொண்டருள்வீராக. |

**शूराणां हि मनुष्याणां त्वद्विधानां महात्मनाम् । विनष्टे वा प्रनष्टे वा शोकः सर्वार्थनाशनः ॥**

| | |
|---|---|
| शूराणां | "சூரர்களும் |
| महात्मनां | மகாத்மாக்களுமாகிய |
| त्वद्विधानां | தேவரீர்போன்ற |
| मनुष्याणां | மானிடர்களுக்கு |
| विनष्टे वा | காணமற்போயிருப்பதில்தானாகட்டும் |
| प्रनष्टे वा | முற்றிலும் ஒழிந்துவிட்டதில்தானாகட்டும் |
| शोकः | துயரமென்பது |
| सर्वार्थनाशनः हि | எல்லாக்காரியங்களின் பயனையும் அழிக்குமே. |

**त्वं तु बुद्धिमतां श्रेष्ठः सर्वशास्त्रार्थकोविदः । मद्विधैः सचिवैः सार्धमरिं जेतुमिहार्हसि ॥**

| | |
|---|---|
| त्वं तु | "தேவரீரோ |
| बुद्धिमतां | பேரறிவாளர்களில் |
| श्रेष्ठः | உத்தமர். |
| सर्वशास्त्रार्थ-कोविदः | எல்லா சாஸ்திரநுட்பங்களிலும் நிபுணர். |
| मद्विधैः | என்போன்ற |
| सचिवैः सार्धं | மந்திரிகளோடு கூடி, |
| अरिं | சத்ருவை |
| जेतुं | வெல்ல |
| इह | இப்பொழுது |
| अर्हसि | தீர்மானித்தருளவேண்டும். |

**न हि पश्याम्यहं कञ्चित्त्रिषु लोकेषु राघव। गृहीतधनुषो यस्ते तिष्ठेदभिमुखो रणे॥१९॥**

| | |
|---|---|
| राघव | "ஸ்ரீராம! |
| रणे | போரில் |
| गृहीतधनुषः | கையில் விற்பிடித்த |
| ते | தேவரீருக்கு |
| अभिमुखः | எதிர்த்து |
| यः | எவன் |
| तिष्ठेत् | நிற்பானோ அப்படிப்பட்ட |
| कञ्चित् हि | ஒருவனையும் |
| त्रिषु | மூன்று |
| लोकेषु | உலகங்களிலும் |
| अहं | நான் |
| पश्यामि न | கண்டிலேன். |

**वानरेषु समासक्तं न ते कार्यं विपत्स्यते । अचिराद्द्रक्ष्यसे सीतां तीर्त्वा सागरमक्षयम् ॥**

| | |
|---|---|
| वानरेषु | "வானரர்களிடத்தில் |
| समासक्तं | ஒப்படைக்கப்பட்ட |
| ते | தேவரீரது |
| कार्यं | கார்யமானது |
| विपत्स्यते न | கெடாது. |
| अक्षयं | அழிவற்ற |
| सागरं | சமுத்திரத்தை |
| तीर्त्वा | தாண்டி |
| सीतां | ஸீதாதேவியாரை |
| अचिरात् | சீக்கிரத்திலேயே |
| द्रक्ष्यसे | காணப்போகின்றீர். |

**तदलं शोकमालम्ब्य क्रोधमालम्ब भूपते । निश्चेष्टाः क्षत्रिया मन्दाः सर्वे चण्डस्य बिभ्यति ॥**

| | | | |
|---|---|---|---|
| भूपते | "சக்கிரவர்த்தியாரே ! | चण्डस्य | கோபங்கொண்டவனுக்கு |
| मन्दाः | கோழைமனத்தினர்களும் | बिभ्यति | நடுங்குகின்றார்கள். |
| निश्चेष्टाः | முயற்சிசெய்யாதவர்களுமான | तत् | ஆகையால் |
| क्षत्रियाः | க்ஷத்திரியர்கள் | शोकं | மனவேதனை |
| सर्वे | எல்லோரும் | आलम्ब्य अलं | பற்றியிருந்தது இத்துடன் விடப்படட்டும். |
| | | क्रोधं | சினத்தை |
| | | आलम्ब | மேற்கொள்ளும். |

**लङ्घनार्थं च घोरस्य समुद्रस्य नदीपतेः । सहास्माभिरिहोपेतः सूक्ष्मबुद्धिर्विचारय ॥ २२ ॥**

| | | | |
|---|---|---|---|
| इह | "இப்பொழுது | घोरस्य | பயங்கரமானதும் |
| अस्माभिः | எங்களோடு | नदीपतेः | நதீபதியுமான |
| सह | கூட | ससुद्रस्य | சமுத்திரத்தை |
| उपेतः | இருந்துகொண்டு | लङ्घनार्थं च | கடக்கும் விஷயம் ஒன்றை மட்டும் |
| सूक्ष्मबुद्धिः | நுண்ணறிவாளராகிய தேவரீர் | विचारय | கவனியும். |

**सर्वं तीर्णं च मे सैन्यं जितमित्युपधार्यताम् ॥ २३ ॥**

| | | | |
|---|---|---|---|
| मे | "எனது | जितं च इति | ஜெயம்பெற்றுவிட்டதாகவும் |
| सैन्यं | சைனியம் | उपाधार्यताम् | நிச்சயமாய் எண்ணத்தக்கது. |
| सर्वं | எல்லாமும் | | |
| तीर्णं | தாண்டிவிட்டதாகவும் | | |

**इमे हि हरयः शूरा विक्रान्ताः कामरूपिणः । तानरीन्विधमिष्यन्ति शिलापादपवृष्टिभिः ॥**

| | | | |
|---|---|---|---|
| शूराः | "சூராகளும் | अरीन् | சத்துருக்களை |
| विक्रान्ताः | ஆண்மையுற்றவர்களும் | शिलापादप- वृष्टिभिः | பாறை, மரங்கள் இவைகளின் வர்ஷங்களால் |
| कामरूपिणः | நினைத்த உருவமெடுக்க வல்லவர்களுமான | विधमिष्यन्ति | ஊதிவிடப்போகின்றார்கள். |
| इमे | இந்த | | |
| हरयः | வானரர்கள் | हि | இதில் சந்தேகம் வேண்டாம். |
| तान् | அந்த | | |

**कथञ्चित्संतरिष्यामस्ते वयं वरुणालयम् । हतमित्येव तं मन्ये युद्धे शत्रुनिबर्हण ॥ २५ ॥**

| | | | |
|---|---|---|---|
| शत्रुनिबर्हण | "சத்துருஸம்ஹாரக! | युद्धे | போரில் |
| ते वयं | இந்த நாம | तं | அவனை |
| वरुणालयं | சமுத்திரத்தை | हतं एव | கொல்லப்பட்டுவிட்டவனாகவே |
| कथञ्चित् | எப்படியாவது | | |
| सन्तरिष्यामः | தாண்டியேதீருவோம். | मन्ये | நான் உறுதிகொண்டிருக்கிறேன். |
| इति | ஆகவே | | |

किमुक्त्वा बहुधा चापि सर्वथा विजयी भवान्। निमित्तानि च पश्यामि मनो मे संप्रहृष्यति॥

| | | | |
|---|---|---|---|
| बहुधा | "பலவாறு | निमित्तानि च | சுபசகுனங்களையும் |
| उक्त्वा किं | சொல்லி பயனென்ன? | पश्यामि | நான் காண்கின்றேன். |
| भवान् | தேவரீர், | मे | எனது |
| सर्वथा अपि | எப்படியும் | मनः | மனமும் |
| विजयी च | வெற்றிபெற்றவரே. | संप्रहृष्यति | உத்ஸாகத்துடன் விளங்குகிறது." |

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे द्वितीयः सर्गः ॥

आदितः श्लोकाः 14720  युद्धकाण्डे आदितः श्लोकाः 45

## तृतियः सर्गः—மூன்றாவது ஸர்க்கம். ॥ ३ ॥

लङ्कायाः दुर्गादिकथनम्—இலங்கையின் துர்க்கம்முதலியறவற்றைக் சொல்வது.

सुग्रीवस्य वचः श्रुत्वा हेतुमत्परमार्थवित्। प्रतिजग्राह काकुत्स्थो हनुमन्तमथाब्रवीत् ॥१॥

| | | | |
|---|---|---|---|
| परमार्थवित् | உண்மை பொருளுணர்ந்தவராகிய | श्रुत्वा | கேட்டு |
| काकुत्स्थः | ஸ்ரீராமர் | प्रतिजग्राह | அங்கீகரித்தார். |
| सुग्रीवस्य | சுக்ரீவனது | अथ | அதன்மேல் |
| हेतुमत् | யுக்தியுக்தமான | हनुमन्तं | ஹனுமாரைப்பார்த்து |
| वचः | சொல்லை | अब्रवीत् | பின்வருமாறு மொழிந்தார்: |

तपसा सेतुबन्धेन सागरोच्छोषणेन वा। सर्वथा सुसमर्थोऽस्मि सागरस्यास्य लङ्घने ॥२॥

| | | | |
|---|---|---|---|
| तपसा | "தவமகிமையாலோ | अस्य | இந்த |
| सेतुबन्धेन | அணைகட்டுவதாலோ | सागरस्य | சமுத்திரத்தை |
| सागरोच्छोषणेन वा | அல்லது சமுத்திரத்தை வற்றச்செய்வதாலோ, | लङ्घने | கடக்கும்விஷயத்தில் |
| | | सुसमर्थः | முற்றிலும் சமர்த்தனாகவே |
| सर्वथा | எப்படியோ | अस्मि | நான் இருக்கிறேன். |

कति दुर्गाणि दुर्गाया लङ्काया ब्रूहि तानि मे। ज्ञातुमिच्छामि तत्सर्वं दर्शनादिव वानर ॥
बलस्य परिमाणं च द्वारदुर्गक्रियामपि। गुप्तिकर्म च लङ्काया रक्षसां सदनानि च ॥४॥

| | | | |
|---|---|---|---|
| वानर | "வானரரே! | लङ्कायाः | இலங்கையை |
| दुर्गायाः | புகமுடியாத | गुप्तिकर्म च | பாதுகாக்கும் விதத்தையும், |
| लङ्कायाः | இலங்கைக்கு | | |
| दुर्गाणि कति | துர்க்கங்கள் எத்தனை. | रक्षसां | அரக்கர்களின் |
| तानि | அவைகளையும் | सदनानि च | வீடுகளையும் |
| बलस्य | சைன்யத்தினுடைய | मे ब्रूहि | எனக்குச் சொல்லும்; |
| परिमाणं च | அளவையும், | तत् सर्वं | அதெல்லாவற்றையும் |
| द्वारदुर्गक्रियां अपि | வாயில்களின் துர்க்கங்களின் அமைப்பையும், | दर्शनात् इव | நேரில் கண்டதுபோல |
| | | ज्ञातुं इच्छामि | அறியவிரும்புகிறேன். |

**यथासुखं यथावच्च लङ्कायामसि दृष्टवान्। सर्वमाचक्ष्व तत्त्वेन सर्वथा कुशलो ह्यसि ॥ ५ ॥**

| | |
|---|---|
| लङ्कायां | "இலங்கையில் |
| यथासुखं | அமைதியுடனும், |
| यथावत् च | உள்ளபடியும், |
| दृष्टवान् असि | எல்லாவற்றையும் பார்த்திருக்கின்றனை. |
| तत्त्वेन | எதையும் விடாமல் |
| सर्वं | எல்லாவற்றையும் |
| आचक्ष्व | சொல்லும். |
| हि | ஏனெனில் |
| सर्वथा | எவ்வாற்றாலும் |
| कुशलः असि | நீ சமர்த்தன்." |

**श्रुत्वा रामस्य वचनं हनुमान्मारुतात्मजः। प्रणम्य शिरसा रामं प्राञ्जलिः सुसमाहितः ॥**
**वाक्यं वाक्यविदां श्रेष्ठो रामं पुनरथाब्रवीत् ॥ ६ ॥**

| | |
|---|---|
| मारुतात्मजः | வாயுவின் புதல்வரும் |
| वाक्यविदां | சொல்நுட்பநிபுணர்களில் |
| श्रेष्ठः | உத்தமருமான |
| हनुमान् | ஹனுமார் |
| रामस्य | ஸ்ரீராமருடைய |
| वचनं | சொல்லை |
| श्रुत्वा | கேட்டு |
| रामं | ஸ்ரீராமரை |
| शिरसा | முடிதாழ்த்தி |
| प्रणम्य | நமஸ்கரித்து |
| रामं | ஸ்ரீராமரைப்பார்த்து |
| सुसमाहितः | மிகஊக்கமுடையவராகி |
| प्राञ्जलिः | கைதொழுது |
| अथ पुनः | பதிலாய் பின்வருமாறு |
| वाक्यं अब्रवीत् | மொழிந்தார் : |

**श्रूयतां सर्वमाख्यास्ये दुर्गकर्मविधानतः। गुप्ता पुरी यथा लङ्का रक्षिता च यथा बलैः ॥**
**राक्षसाश्च यथा स्निग्धा रावणस्य च तेजसा। परां समृद्धिं लङ्कायाः सागरस्य च भीमताम्॥**
**विभागं च बलौघस्य निर्देशं वाहनस्य च ॥ ८ ॥**

| | |
|---|---|
| दुर्गकर्मविधानतः | " துர்க்கவகைகளி |
| यथा | எப்படி [னமைப்பால் |
| लङ्का | இலங்கை |
| पुरी | நகர் |
| गुप्ता | காப்பாற்றப்பட்டிருக் |
| यथा | எவ்வாறு [கிறதோ, |
| बलैः च | சைன்யங்களால் |
| रक्षिता | காக்கப்பட்டிருக்கிற |
| राक्षसाः | ராக்ஷஸர்கள் [தோ |
| यथा | எப்படி |
| स्निग्धाः च | அன்புடனிருக்கிறார்களோ, |
| रावणस्य | ராவணனுடைய |
| तेजसा | பிரபாவத்தால் |
| लङ्कायाः | இலங்கையின் |
| परां | அளவுகடந்த |
| समृद्धिं च | செல்வச்செழிப்பு எவ்வளவோ அவ்வளவையும் |
| सागरस्य | சமுத்திரத்தினுடைய |
| भीमतां च | பயங்கரமான தோற்றமெதுவோ அதையும், |
| बलौघस्य | சேனைசமூகத்தினது |
| विभागं च | வகுப்பு எத்தனையோ அத்தனையையும், |
| वाहनस्य | வாஹனத்தின் |
| निर्देशं च | தொகை எவ்வளவோ அதையும் |
| सर्वं | எல்லாவற்றையும் |
| आख्यास्ये | விண்ணப்பஞ்செய்கின்றேன். |
| श्रूयताम् | செவிசாய்க்கப்படட்டும்". |

**एवमुक्त्वा कपिश्रेष्ठः कथयामास तत्त्वतः ॥ ९ ॥**

| | | | |
|---|---|---|---|
| कपिश्रेष्ठः | வானரோத்தமர் | तत्त्वतः | உள்ளபடியே |
| एवं | மேற்கண்டவாறு | कथयामास | பின்வருமாறு விளங்க விளம்பினார்: |
| उक्त्वा | சொல்லிவிட்டு | | |

**हृष्टप्रमुदिता लङ्का मत्तद्विपसमाकुला । महती रथसंपूर्णा रक्षोगणसमाकुला ॥**
**वाजिभिश्च सुसंपूर्णा सा पुरी दुर्गमा परैः ॥ १० ॥**

| | | | |
|---|---|---|---|
| सा | "அந்த | रक्षोगणसमाकुला | ராக்ஷஸகணங்களால் நிறைந்தது. |
| लङ्का | இலங்கை | वाजिभिः | குதிரைகளால் |
| पुरी | நகர் | सुसम्पूर्णा | மிக்கநிரம்பியது. |
| हृष्टप्रमुदिता | வளமும் வனப்பு முற்றது. | महती | மிகவிசாலமானது |
| मत्तद्विप-समाकुला | கொழுத்த யானைகளால் நிறைந்தது. | परैः च | இதரர்களாலே |
| रथसंपूर्णा | ரதங்களால் நிறைந்தது. | दुर्गमा | புகமுடியாதது. |

**दृढबद्धकवाटानि महापरिघवन्ति च । द्वाराणि विपुलान्यस्याश्चत्वारि सुमहान्ति च ॥ ११ ॥**

| | | | |
|---|---|---|---|
| अस्याः | "இதற்கு | सुमहान्ति च | மிகப்பெரியனவும் |
| दृढबद्ध-कवाटानि | உறுதியாயமைக்கப்பட்ட கதவுகளையுடையனவும் | विपुलानि | விசாலமானவும் |
| महापरिघवन्ति च | பெரும் உழலைமரங்களையுடையனவும் | चत्वारि | நான்கு |
| | | द्वाराणि | வாயில்களிருக்கின்றன. |

**तत्रेषूपलयन्त्राणि बलवन्ति महान्ति च । आगतं परसैन्यं तु तत्र तैः प्रतिहन्यते ॥ १२ ॥**

| | | | |
|---|---|---|---|
| तत्र | "அவைகளில் | तैः | அவைகளால் |
| बलवन्ति | உறுதியானவைகளும் | आगतं | வந்த |
| महान्ति च | பெரியவையுமான | परसैन्यं | சத்ருசைனியமானது |
| इषूपल-यन्त्राणि | கற்களுக்கும் அம்புகளுக்குமுரிய யந்திரங்களிருக்கின்றன. | तत्र तु | அப்பொழுதே |
| | | प्रतिहन्यते | கொன்றுவிடப்படுகிறது. |

**द्वारेषु संस्कृता भीमाः कालायसमयाः शिताः । शतशो रचिता वीरैः शतघ्न्यो रक्षसां गणैः ॥**

| | | | |
|---|---|---|---|
| द्वारेषु | "வாயில்களில் | शिताः | கூர்மையான |
| रक्षसां | அரக்கர்களின் | शतघ्न्यः | 'சதக்னி' என்ற ஆயுதங்கள் |
| वीरैः | சூர | शतशः | நூற்றுக்கணக்காகவும் |
| गणैः | கூட்டங்களால் | संस्कृताः | எப்பொழுதும் சித்தமாயிருக்கின்றவைகளாகவும் |
| भीमाः | பயங்கரமானவைகளும் | | |
| कालायसमयाः | எஃகினால் செய்யப்பட்டவைகளுமான | रचिताः | வைக்கப்பட்டிருக்கின்றன. |

**सौवर्णश्च महांस्तस्याः प्राकारो दुष्प्रधर्षणः । मणिविद्रुमवैडूर्यमुक्ताविरचितान्तरः ॥ १४ ॥**

| | | | |
|---|---|---|---|
| तस्याः | "அதற்கு | दुष्प्रधर्षणः | அசைக்கமுடியாததாய் |
| सौवर्णः | பொன்னாலெடுக்கப் பட்டதும் | | |
| मणिविद्रुम-वैडूर्यमुक्ता-विरचितान्तरः | மாணிக்யம், பவழம், வைடூர்யம், முத்து இவைகள் இடைவெளிகளில் பதிக்கப் பெற்றதும் | महान् च | பெரிதாயுமிருக்கின்ற |
| | | प्राकारः | ஒரு மதிலிருக்கிறது. |

**सर्वतश्च महाभीमाः शीततोयवहाः शुभाः । अगाधा ग्राहवत्यश्च परिखा मीनसंकुलाः ॥**

| | | | |
|---|---|---|---|
| सर्वतः | "நாற்புறத்திலும் | ग्राहवत्यः च | முதலைகள் நிறைந்தவைகளும் |
| शीततोयवहाः | குளிர்ந்த ஜலம் நிரம்பியவைகளும் | मीनसंकुलाः | மீன்கள் நிறைந்தவைகளும் |
| शुभाः | அழகியவைகளும் | महाभीमाः च | மகாபயங்கரமானவைகளுமான |
| अगाधाः | அளவிடமுடியாத ஆழமுடையவைகளும் | परिखाः | அகழிகள் இருக்கின்றன. |

**द्वारेषु तासां चत्वारः संक्रमाः परमायताः । यन्त्रैरुपेता बहुभिर्महद्भिर्गृहपङ्क्तिभिः ॥ १६ ॥**

| | | | |
|---|---|---|---|
| तासां | "இவைகளின் | महद्भिः | விசாலமான |
| द्वारेषु | வாயில்களில் | गृहपंक्तिभिः | வீடுவரிசைகளாலும் |
| परमायताः | மிக விசாலமானவைகளும் | उपेताः | பக்கலிலிருக்கப்பெற்றனவுமான |
| बहुभिः | பல | चत्वारः | நான்கு |
| यन्त्रैः | யந்திரங்களாலும் | संक्रमाः | பாலங்களிருக்கின்றன. |

**त्रायन्ते संक्रमास्तत्र परसैन्यागमे सति । यन्त्रैस्तैरवकीर्यन्ते परिखासु समन्ततः ॥ १७ ॥**

| | | | |
|---|---|---|---|
| तत्र | "அவ்விடத்தில் | तैः | அந்த |
| संक्रमाः | பாலங்கள் | यन्त्रैः | யந்திரங்களால் |
| त्रायन्ते | நன்கு பாதுகாக்கப் படுகின்றன. | समन्ततः | நாற்புறமும் |
| परसैन्यागमे सति | சத்ருசைன்யம் வந்த பொழுது | परिखासु | அகழிகளில் |
| | | अवकीर्यन्ते | தள்ளப்படுகின்றன. |

**एकस्त्वकम्प्यो बलवान्संक्रमः सुमहादृढः । काञ्चनैर्बहुभिः स्तम्भैर्वेदिकाभिश्च शोभितः ॥**

| | | | |
|---|---|---|---|
| एकः | "ஒரு | बहुभिः | பல |
| संक्रमः तु | பாலம்மட்டும் | काञ्चनैः | பொன் |
| सुमहादृढः | மிகஉறுதியாய் | स्तम्भैः | ஸ்தம்பங்களாலும் |
| अकम्प्यः | அசைக்கவொண்ணாததாய் | वेदिकाभिः च | திண்ணைகளாலும் |
| बलवान् | ஸ்திரமாயிருக்கிறது. | शोभितः | அழகுற்று விளங்குகிறது. |

**स्वयं प्रकृतिसंपन्नो युयुत्सू राम रावणः । उत्थितश्चाप्रमत्तश्च बलानामनुदर्शने ॥ १९ ॥**

| | |
|---|---|
| राम | "ஸ்ரீராம! |
| रावणः | ராவணன் |
| स्वयं | தனது |
| प्रकृतिसम्पन्नः | பிறவிக்குணங்களோடு விளங்கிக்கொண்டு |
| युयुत्सुः | போரை விரும்பி |
| उत्थितः | ஊக்கமுடனிருப்ப |
| बलानां | சைன்யங்களை [வனுய் |
| अनुदर्शने | மேற்பார்வை பார்ப்பதில் |
| अप्रमत्तः च | ஜாக்கிரதையுடனுமிருக்கின்றான். |

**लङ्का पुनर्निरालम्बा देवदुर्गा भयावहा । नादेयं पार्वतं वान्यं कृत्रिमं च चतुर्विधम् ॥२०॥**

| | |
|---|---|
| लङ्का | "இலங்கைநகர் |
| निरालम्बा | ஏறுவதற்கு ஒருவகைப்பிடிப்புமின்றி தனித்திருக்கிறது. |
| देवदुर्गा | தேவர்களாலும் புகமுடியாதது. |
| भयावहा | பயங்கரமானது. |
| पुनः | இதுவுமின்றி |
| चतुर्विधं | நான்குவகையாகிற |
| नादेयं | நீரரண், |
| पार्वतं | மலையரண், |
| वान्यं | காட்டரண், |
| कृत्रिमं च | நிலவரணுமிருக்கின்றன. |

**स्थिता पारे समुद्रस्य दूरपारस्य राघव । नौपथोऽपि च नास्त्यत्र निरादेशश्च सर्वतः ॥**

| | |
|---|---|
| राघव | "ஸ்ரீராம! |
| दूरपारस्य | வெகுதூரத்துக்கப்பால் கரைகளையுடைய |
| समुद्रस्य | சமுத்திரத்தினது |
| पारे | எட்டாக்கையின் மத்தியில் |
| स्थिता | இருக்கின்றது. |
| अत्र | அத்திக்கில் |
| नौपथः अपि | கப்பல் வழியும் |
| अस्ति न | இல்லை. |
| सर्वतः | எங்கும் |
| निरादेशः च | சமாசாரங்களின் போக்குவரத்தும் அப்படியே இல்லை. |

**शैलाग्रे रचिता दुर्गा सा पूर्देवपुरोपमा । वाजिवारणसंपूर्णा लङ्का परमदुर्जया ॥ २२ ॥**

| | |
|---|---|
| सा | "அந்த |
| लङ्का | இலங்கை |
| पूः | நகர் |
| शैलाग्रे | ஓர் மலையின் உச்சியில் |
| रचिता | அமைக்கப்பட்டிருக்கிறது ; |
| दुर्गा | எவராலும் புகமுடியாதது ; |
| देवपुरोपमा | தேவநகரம்போன்றது; |
| वाजिवारण-संपूर्णा | குதிரைகளாலும், யானைகளாலும் நிறைந்துள்ளது ; |
| परमदुर्जया | எவ்வகையாலும் வெல்லமுடியாதது. |

**परिखाश्च शतघ्नयश्च यन्त्राणि विविधानि च । शोभयन्ति पुरीं लङ्कां रावणस्य दुरात्मनः ॥**

| | |
|---|---|
| दुरात्मनः | "கொடிய |
| रावणस्य | ராவணனது |
| लङ्कां | இலங்கை |
| पुरीं | நகரை |
| परिखाः च | அகழ்களும் |
| शतघ्नयः च | 'சதக்னி' எனும் ஆயுதங்களும் |
| विविधानि | மற்றும்பலவித |
| यन्त्राणि च | யந்திரங்களும் |
| शोभयन्ति | விளங்கச்செய்கின்றன. |

**अयुतं रक्षसामत्र पूर्वद्वारं समाश्रितम् । शूलहस्ता दुराधर्षाः सर्वे खड्गाग्रयोधिनः ॥ २४ ॥**

| | | | |
|---|---|---|---|
| **अत्र** | "இதில் | **सर्वे** | எல்லோரும் |
| **पूर्वद्वारं** | கிழக்குவாயிலை | **शूलहस्ताः** | சூலங்களைக்கையிற் கொண்டவர்கள். |
| **रक्षसां अयुतं** | பதினாயிரம் அரக்கர்கள் | **दुराधर्षाः** | ஒருபொழுதும் வெல்லமுடியாதவர்கள். |
| **समाश्रितं** | காத்துக்கொண்டிருக்கிறார்கள். | **खड्गाग्रयोधिनः** | கத்திமுனையால் போர் புரிபவர்கள். |

**नियुतं रक्षसामत्र दक्षिणद्वारमाश्रितम् । चतुरङ्गेण सैन्येन योधास्तत्राप्यनुत्तमाः ॥ २५ ॥**

| | | | |
|---|---|---|---|
| **अत्र** | "இதில் | **आश्रितं** | காக்கின்றார்கள். |
| **राक्षसां नियुतं** | லக்ஷம் அரக்கர்கள் | **तत्र** | அவ்விடத்தில் |
| **दक्षिणद्वारं** | தென் வாயிலை | **योधाः** | போர்வீரர்கள் |
| **चतुरङ्गेण** | சதுரங்க | **अनुत्तमाः** | ஒப்புயர்வில்லாதவர்கள். |
| **सैन्येन अपि** | சைன்யத்தோடுகூடவே | | |

**प्रयुतं रक्षसामत्र पश्चिमद्वारमाश्रितम् । चर्मखड्गधराः सर्वे तथा सर्वास्त्रकोविदाः ॥ २६ ॥**

| | | | |
|---|---|---|---|
| **अत्र** | "இதில் | **सर्वे** | எல்லோரும் |
| **राक्षसां प्रयुतं** | பத்துலக்ஷம் அரக்கர்[கள் | **चर्मखड्गधराः** | கேடயமும், கத்தியுமேந்தியவர்கள். |
| **पश्चिमद्वारं** | மேற்குவாயிலை | **सर्वास्त्रकोविदाः** | எல்லா அஸ்திரங்களிலும் நிபுணர்கள். |
| **आश्रितं** | காக்கின்றார்கள். | | |
| **तथा** | அப்படியே | | |

**न्यर्बुदं रक्षसामत्र उत्तरद्वारमाश्रितम् । रथिनश्चाश्ववाहाश्च कुलपुत्राः सुपूजिताः ॥ २७ ॥**

| | | | |
|---|---|---|---|
| **अत्र** | "அதில் | **अश्ववाहाः च** | குதிரைகளிலிருந்து போர்புரிபவர்கள். |
| **न्यर्बुदं रक्षसां** | ஆயிரம் லக்ஷம் அரக்கர்கள் | **कुलपुत्राः** | நற்குலத்திற்பிறந்தவர்கள். |
| **उत्तरद्वारं** | வடக்குவாயிலை | **सुपूजिताः** | நன்கு கௌரவிக்கப்பட்டவர்கள். |
| **आश्रितं** | காக்கின்றார்கள். | | |
| **रथिनः च** | ரதங்களிலிருந்து போர்புரிபவர்கள். | | |

**शतशोऽथ सहस्राणि मध्यमं स्कन्धमाश्रिताः । यातुधाना दुराधर्षाः शतकोटिश्च रक्षसाम् ॥**

| | | | |
|---|---|---|---|
| **शतकोटिः** | "நூறுகோடி | **स्कन्धं** | பிரதேசத்தை |
| **यातुधानाः** | யாதுதானர்கள் | **आश्रिताः** | காக்கின்றார்கள். |
| **शतशः** | நூற்றுக்கணக்காக | **रक्षसां सहस्राणि अथ** | ஆயிரம் அரக்கர்களும் |
| **दुराधर्षाः** | எவராலும் வெல்லமுடியாதவர்களாய் | **च** | அப்படியே காக்கின்றார்கள். |
| **मध्यमं** | மத்திய | | |

बलैकदेशः क्षपितो राक्षसानां दुरात्मनाम् ॥ २९ ॥

| | | | |
|---|---|---|---|
| दुरात्मनां | "துஷ்டர்களாகிய | बलैकदेशः | சைன்யத்தின் ஓர் பங்கு |
| राक्षसानां | ராக்ஷஸர்களுடைய | क्षपितः | நாசம்பண்ணப் பட்டது. |

ते मया संक्रमा भग्नाः परिखाश्चावपूरिताः । दग्धा च नगरी लङ्का प्राकाराश्चावसादिताः ॥

| | | | |
|---|---|---|---|
| मया | "என்னால் | लङ्का | இலங்கை |
| ते | அந்த | नगरी च | நகரும் |
| संक्रमाः | பாலங்கள் | दग्धा | எரிக்கப்பட்டது. |
| भग्नाः | முறிக்கப்பட்டன. | प्राकाराः च | மதில்களும் |
| परिखाः च | அகழ்களும் | अवसादिताः | இடித்துதள்ளப்பட்டன. |
| अवपूरिताः | தூர்க்கப்பட்டன. | | |

येन केन च मार्गेण तराम वरुणालयम् ॥ ३१ ॥

| | | | |
|---|---|---|---|
| येन | "எவ்விதமாகவாவது | वरुणालयं | சமுத்திரத்தை |
| केन च | ஏதோ ஒரு | तराम | நாம் கடந்துவிடுவோம். |
| मार्गेण | உபாயத்தைக்கொண்டு | | |

हतेति नगरी लङ्का वानरैरवधार्यताम् ॥ ३२ ॥

| | | | |
|---|---|---|---|
| वानरैः | "வானரர்களால் | हता | அழிக்கப்பட்டுவிட்டது |
| लङ्का | இலங்கை | इति | என்று |
| नगरी | நகர் | अवधार्यताम् | திருவுள்ளத்தில் கொள்ளப்படட்டும். |

अङ्गदो द्विविदो मैन्दो जाम्बवान्पनसो नलः । नीलः सेनापतिश्चैव बलशेषेण किं तव ॥
प्लवमाना हि गत्वा तां रावणस्य महापुरीम् । सपर्वतवनां भित्त्वा सखातां सप्रतोरणाम् ॥
सप्राकारां सभवनामानयिष्यन्ति मैथिलीम् ॥ ३४ ॥

| | | | |
|---|---|---|---|
| अङ्गदः | "அங்கதனும், | सपर्वतवनां | மலைகளோடும் வனங்களோடும்கூடவும், |
| द्विविदः | த்விவிதனும், | सखातां | அகழ்களோடுகூடவும் |
| मैन्दः | மைந்தனும், | सप्रतोरणां | கோட்டைவாயில்களோடுகூடவும், |
| जाम्बवान् | ஜாம்பவானும், | सप्राकारां | மதில்களோடுகூடவும், |
| पनसः | பனஸனும், | सभवनां | மாளிகைகளோடு கூடவும் |
| नलः | நளனும் | भित्त्वा | உருவழித்து |
| सेनापतिः | சேனைத்தலைவனான | मैथिलीं | மைதிலியாரை |
| नीलः एव | நீலனும் | आनयिष्यन्ति | கொண்டுவருவார்கள். |
| रावणस्य | ராவணனது | बलशेषेण | மீதிய சைன்யத்தினால் |
| महापुरीं | பெரும்நகருக்கு | तव | தேவரீருக்கு |
| प्लवमानाः हि | பாய்ந்தே | किं च | இப்பொழுது ஆவதொன்றுமில்லை. |
| गत्वा | சென்று | | |
| तां | அதை | | |

**एवमाज्ञापय क्षिप्रं बलानां सर्वसंग्रहम् । मुहूर्तेन तु युक्तेन प्रस्थानमभिरोचय ॥ ३५ ॥**

| | | | |
|---|---|---|---|
| बलानां | "ஸைன்யங்களின் | आज्ञापय | ஆக்ஞாபித்தருளும். |
| सर्वसंग्रहं | எல்லாக்கணங்களையும் | युक्तेन | நன்மை பயக்கும் |
| | பார்த்து | मुहूर्तेन तु | முகூர்த்தத்திலேயே |
| एवं | மேற்கண்டவாறு | प्रस्थानं | பிரயாணப்படுதலை |
| क्षिप्रं | இப்பொழுதே | अभिरोचय | நிச்சயித்தருளும்." |

**इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये**
**युद्धकाण्डे तृतीयः सर्गः ॥**

आदितः श्लोकाः **14755** युद्धकाण्डे आदितः श्लोकाः **80**



**चतुर्थः सर्गः**—நான்காவது ஸர்க்கம் ॥ ४ ॥

**ससैन्यस्य श्रीरामस्य समुद्रतीरगमनम्**—ஸைன்யங்களுடன் ஸ்ரீராமர் ஸமுத்திரதீரத்தை அடைவது.

**श्रुत्वा हनुमतो वाक्यं यथावदनुपूर्वशः । ततोऽब्रवीन्महातेजा रामः सत्यपराक्रमः ॥ १ ॥**

| | | | |
|---|---|---|---|
| महातेजाः | மகா தேஜஸ்வியும் | यथावत् | உள்ளபடியே |
| सत्यपराक्रमः | வீண்படாத பராக்கி | अनुपूर्वशः | ஒன்றும் விடாது |
| | ரமசாலியுமான | श्रुत्वा | கேட்டு, |
| रामः | ஸ்ரீராமர் | ततः | அதன்மேல் |
| हनुमतः | ஹனுமாருடைய | अब्रवीत् | பின்வருமாறு |
| वाक्यं | சொல்லை | | மொழிந்தார்: |

**यां निवेदयसे लङ्कां पुरीं भीमस्य रक्षसः । क्षिप्रमेनां वधिष्यामि सत्यमेतद्ब्रवीमि ते ॥ २ ॥**

| | | | |
|---|---|---|---|
| भीमस्य | "பயங்கரனான | क्षिप्रं | இதோ |
| रक्षसः | அரக்கனது | वधिष्यामि | நாசம்பண்ணிவிடப் |
| यां | எந்த | | போகிறேன். |
| लङ्कां | இலங்கை | ते | உனக்கு |
| पुरीं | நகரை | एतत् | இதை |
| निवेदयसे | தெரிவிக்கின்றீரோ | सत्यं | உறுதியாய் |
| एनां | இதை | ब्रवीमि | உரைக்கிறேன். |

**अस्मिन्मुहूर्ते सुग्रीव प्रयाणमभिरोचय । युक्तो मुहूर्तो विजयः प्राप्तो मध्यं दिवाकरः ॥**

| | | | |
|---|---|---|---|
| दिवाकरः | "சூரியபகவான் | विजयः | விஜயமெனப்படுவது. |
| मध्यं | உச்சியை | सुग्रीव | சுக்ரீவ, |
| प्राप्तः | அடைந்திருக்கிறது | अस्मिन् | இந்த |
| | ஆகிய | मुहूर्ते | முகூர்த்தத்தில் |
| मुहूर्तः | முகூர்த்தமானது | प्रयाणं | பிரயாணத்தை |
| युक्तः | ஏற்றது. | अभिरोचय | ஏற்றுக்கொள்வாயாக. |

